# Shri Batukabhairavashtakastotram or Mahabhairavashtakam

# श्रीबटुकभैरवाष्टकस्तोत्रम् अथवा महाभैरवाष्टकम्

## Sanskrit Document Information



Text title : baTukabhairavAShTakam

File name : baTukabhairavAShTakam.itx

Category : shiva

Location : doc_shiva

Transliterated by : Gopal Upadhyay gopal.j.upadhyay at gmail.com

Proofread by : Gopal Upadhyay, Shashtri Pulkitbhai Vyas

Description/comments : Rudrayamala

Latest update : May 18, 2018

Send corrections to : Sanskrit@cheerful.com



May 18, 2018

*sanskritdocuments.org*

# श्रीबटुकभैरवाष्टकस्तोत्रम् अथवा महाभैरवाष्टकम्



श्रीगणेशाय नमः ।
श्रीउमामहेश्वराभ्यां नमः ।
श्रीगुरवे नमः ।
श्रीभैरवाय नमः ।

अस्य श्रीबटुकभैरवाष्टकस्तोत्रमन्त्रस्य ईश्वर ऋषिः ।
गायत्री छन्दः । बटुकभैरवो देवताः । ह्रीं बीजम् । बटुकायेतिशक्तिः ।
प्रणवः कीलकम् । धर्मार्म्मार्थकाममोक्षार्थे पाठे विनियोगः ॥

अथ करन्यासः ।
कं अङ्गुष्ठाभ्यां नमः । हं तर्जनीभ्यां स्वाहा ।
खं मध्यमाभ्यां वषट् । सं अनामिकाभ्यां हूं ।
गं कनिष्ठिकाभ्यां वौषट् । क्षं करतलकरपृष्ठाभ्यां फट् ॥

अथ हृदयादिन्यासः ।
कं हृदयाय नमः । हं शिरसे स्वाहा ।
खं शिखायै वषट् । सं कवचाय हूं ।
गं नेत्रत्रयाय वौषट् । क्षं अस्त्राय फट् ॥

अथाङ्ग न्यासः ।
क्षं नमः हृदि । कं नमः नासिकयोः ।
हं नमः ललाटे । खं नमः मुखे ।
सं नमः जिह्वायाम् । रं नमः कण्ठे ।
मं नमः स्तनयोः । नमः नमः सर्वाङ्गेषु ।

आज्ञा ।

तीक्ष्णदंष्ट्र महाकाय कल्पान्त दहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञान्दातुमर्हसि ॥ १॥

अथ ध्यानम् ।

करकलितकपालः कुण्डलीदण्डपाणि
स्तरुणतिमिरनीलोव्यालयज्ञोपवीती ।
क्रतुसमयसपर्या विघ्नविच्छेदहेतु-
र्जयतिबटुकनाथः सिद्धिदः साधकानाम् ॥ २॥

इति ध्यानम् ।

पूर्वे आसिताङ्गभैरवाय नमः पूर्वदिशि मां रक्ष रक्ष
कालकण्टकान् भक्ष भक्ष आवाहयाम्यहमत्रतिष्ट तिष्ट हूं फट् स्वाहा ।

आग्नेये रुरुभैरवाय नमः आग्नेये मां रक्ष रक्ष
कालकण्टकान् भक्ष भक्ष आवाहयाम्यहमत्रतिष्ट तिष्ट हूं फट् स्वाहा ।

दक्षिणे चण्डभैरवाय नमः दक्षिणे मां रक्ष रक्ष
कालकण्टकान् भक्ष भक्ष आवाहयाम्यहमत्रतिष्ट तिष्ट हूं फट् स्वाहा ।

नैऋत्ये क्रोधभैरवाय नमः नैऋत्यां मां रक्ष रक्ष
कालकण्टकान् भक्ष भक्ष आवाहयाम्यहमत्रतिष्ट तिष्ट हूं फट् स्वाहा ।

प्रतिच्यां उन्मत्तभैरवाय नमः प्रतिच्यां मां रक्ष रक्ष
कालकण्टकान् भक्ष भक्ष आवाहयाम्यहमत्रतिष्ट तिष्ट हूं फट् स्वाहा ।

वायव्ये कपालभैरवाय नमः वायव्ये मां रक्ष रक्ष
कालकण्टकान् भक्ष भक्ष आवाहयाम्यहमत्रतिष्ट तिष्ट हूं फट् स्वाहा ।

उदिच्यां भीषणभैरवाय नमः उदिच्यां मां रक्ष रक्ष
कालकण्टकान् भक्ष भक्ष आवाहयाम्यहमत्रतिष्ट तिष्ट हूं फट् स्वाहा ।

ईशान्यां संहारभैरवाय नमः ईशाने मां रक्ष रक्ष
कालकण्टकान् भक्ष भक्ष आवाहयाम्यहमत्रतिष्ट तिष्ट हूं फट् स्वाहा ।

॥ नमो भगवते भैरवाय नमः क्लीं क्लीं क्लीं ॥

इति मन्त्रमष्टोत्तर शतं जप्त्वा चतुर्विध पुरुषार्थसिद्धये
महासिद्धिकरभैरवाष्टकस्तोत्र पाठे विनियोगः ॥

यं यं यं यक्षरूपं दिशिचकृतपदं भूमिकम्पायमानं
सं सं संहारमूर्तिं शिरमुकुट्जटा भालदेशोऽर्धचन्द्रम् ।
दं दं दं दीर्घकायं विकृतनख मुखं चोर्ध्वरोमं करालं

पं पं पं पापनाशं नतिरिह सततं भैरवं क्षेत्रपालम् ॥ १॥

रं रं रं रक्तवर्णं कटिनतनुमयं तीक्ष्णदंष्ट्रं च भीमं
घं घं घं घोरघोषं घ घ घनघटितं घुर्घुरा घोरनादम् ।
कं कं कं कालपाशं ध्रिकि ध्रिकि चकितं कालमेघावभासं
तं तं तं दिव्यदेहं नतिरिह सततं भैरवं क्षेत्रपालम् ॥ २॥

लं लं लं लम्बदन्तं ल ल ल लितल ल्लोलजिह्वा करालं
धूं धूं धूं धूम्रवर्णं स्फुट विकृतनखमुखं भास्वरं भीमरूपम् ।
रुं रुं रुं रूण्डमालं रुधिरमयतनुं ताम्रनेत्रं सुभीमं
नं नं नं नग्नरूपं नतिरिह सततं भैरवं क्षेत्रपालम् ॥ ३॥

वं वं वं वायुवेगं ग्रहगणनमितं ब्रह्मरुद्रैस्सुसेव्यं
खं खं खं खड्गहस्तं त्रिभुवननिलयं घोररूपं महोग्रम् ।
चं चं चं व्यालहस्तं चालित चल चला चालितं भूतचक्रं
मं मं मं मातृरूपं नतिरिह सततं भैरवं क्षेत्रपालम् ॥ ४॥

शं शं शं शङ्खहस्तं शशिशकलयरं सर्पयज्ञोपवीतं
मं मं मं मन्त्रवर्णं सकलजननुतं मन्त्र सूक्ष्मं सुनित्यम् ।
भं भं भं भूतनाथं किलिकिलिकिलितं गेहगेहेरटन्तं
अं अं अं मुख्यदेवं नतिरिह सततं भैरवं क्षेत्रपालम् ॥ ५॥

खं खं खं खड्गभेदं विषममृतमयं कालकालं सुकालं
क्षं क्षं क्षं क्षिप्रवेगं दहदहदहनं तप्तसन्तप्तमानम् ।
हं हं हं कारनादं प्रकटितदपातं गर्जितां भोपिभूमिं
बं बं बं बाललीलं नतिरिह सततं भैरवं क्षेत्रपालम् ॥ ६॥

सं सं सं सिद्धियोगं सकलगुणमयं रौद्ररूपं सुरौद्रं
पं पं पं पद्मनाभं हरिहरनुतं चन्द्रसूर्याग्नि नेत्रम् ।
ऐं ऐं ऐं ऐश्वर्यरूपं सततभयहरं सर्वदेवस्वरूपं
रौं रौं रौं रौद्रनादं नतिरिह सततं भैरवं क्षेत्रपालम् ॥ ७॥

हं हं हं हंसहास्यं कलितकरतलेकालदण्डं करालं
थं थं थं स्थैर्यरूपं शिरकपिलजटं मुक्तिदं दीर्घहास्यम् ।
टं टं टंकारभीमं त्रिदशवरनुतं लटलटं कामिनां दर्पहारं
भूं भूं भूं (भुं भुं भुं) भूतनाथं
नतिरिह सततं भैरवं क्षेत्रपालम् ॥ ८॥

भैरवस्याष्टकं स्तोत्रं पवित्रं पापनाशनम् ।
महाभयहरं दिव्यं सिद्धिदं रोगनाशनम् ॥

इति श्रीरुद्रयामलेतन्त्रे महाभैरवाष्टकं सम्पूर्णम् ।

Encoded by Gopal Upadhyay gopal.j.upadhyay at gmail.com from a manuscript
Proofread by Gopal Upadhyay, Shashtri Pulkitbhai Vyas

---

*Shri Batukabhairavashtakastotram or Mahabhairavashtakam*
pdf was typeset on May 18, 2018

Please send corrections to *sanskrit@cheerful.com*

